अस्थुरु चित्रा उषसः पुरस्तान्मिता इव स्व वोऽध्वरेषु ।
व्यू व्रजस्य तमसो द्वारोच्छंतीरव्रञ्छुचयः पावकाः ॥ २ ॥

अस्थुः । ऊं इति । चित्राः । उषसः । पुरस्तात् । मिताःऽइव ।
स्वरवः । अध्वरेषु ।

वि । ऊं इति । व्रजस्य । तमसः । द्वारा । उच्छंतीः । अव्रन् ।
शुचयः । पावकाः ॥ २ ॥

उच्छंतीरद्य चितयंत भोजान्राधोदेयायोषसो मघोनीः ।
अचित्रे अंतः पणयः ससंत्वबुध्यमाना तमसो विमध्ये॥३॥

उच्छंतीः । अद्य । चितयंत । भोजान् । राधःऽदेयाय । उषसः ।
मघोनीः ।

अचित्रे । अंतरिति । पणयः । ससंतु । अबुध्यमानाः । तमसः ।
विऽमध्ये ॥ ३ ॥

कुवित्स देवीः सनयो नवो वा यामो बभूयादुषसो वो अद्य।
येना नवग्वे अंगिरे दशग्वे सप्तास्ये रेवती रेवदूष ॥ ४ ॥

कुवित् । सः । देवीः । सनयः । नवः । वा । यामः । बभूयात्।
उषसः । वः । अद्य ।

येन । नवऽग्वे । अंगिरे । दशऽग्वे । सप्तऽआस्ये । रेवतीः । रेवत् ।
ऊष ॥ ४ ॥

यूयं हि देवीर्ऋतयुग्भिरश्वैः परिप्रयाथ भुवनानि सद्यः ।
प्रबोधयंतीरुषसः ससंतं द्विपाच्चतुष्पाच्चरथाय जीवं ॥ ५ ॥

यूयं । हि । देवीः । ऋतयुक्ऽभिः । अश्वैः । परिऽप्रयाथ । भुवनानि । सद्यः ।
प्रऽबोधयंतीः । उषसः । ससंतं । द्विऽपात् । चतुःऽपात् । चरथाय । जीवं ॥ ५ ॥

क्व स्विदासां कतमा पुराणी यया विधाना विदधुर्ऋभूणां ।
शुभं यच्छुभ्रा उषसश्चरंति न वि ज्ञायंते सदृशीरजुर्याः ॥६॥

क्व । स्वित् । आसां । कतमा । पुराणी । यया । विऽधाना । विऽदधुः । ऋभूणां ।
शुभं । यत् । शुभ्राः । उषसः । चरंति । न । वि । ज्ञायंते । सऽदृशीः । अजुर्याः ॥ ६ ॥

ता घा ता भद्रा उषसः पुरासुरभिष्टिद्युम्ना ऋतजातसत्याः ।
यास्वीजानः शशमान उक्थैः स्तुवञ्छंसन्द्रविणं सद्य आप ॥ ७ ॥

ताः । घ । ताः । भद्राः । उषसः । पुरा । आसुः । अभिष्टिऽद्युम्नाः । ऋतजातऽसत्याः ।
यासु । ईजानः । शशमानः । उक्थैः । स्तुवन् । शंसन् । द्रविणं । सद्यः । आप ॥ ७ ॥

ता आ चरंति समना पुरस्तात्समानतः समना पप्रथानाः ।
ऋतस्य देवीः सदसो बुधाना गवां न सर्गा उषसो जरंते ॥ ८ ॥

ताः । आ । चरंति । समना । पुरस्तात् । समानतः । समना । पप्रथानाः ।
ऋतस्य । देवीः । सदसः । बुधानाः । गवां । न । सर्गाः । उषसः । जरंते ॥ ८ ॥

ता इन्न्वे३व समना समानीरमीतवर्णा उषसश्चरंति ।
गूहंतीरभ्वमसितं रुशद्भिः शुक्रास्तनूभिः शुचयो रुचानाः ॥ ९ ॥

ताः । इत् । नु । एव । समना । समानीः । अमीतऽवर्णाः । उषसः । चरंति ।
गूहंतीः । अभ्वं । असितं । रुशत्ऽभिः । शुक्राः । तनूभिः । शुचयः । रुचानाः ॥ ९ ॥

रयिं दिवो दुहितरो विभातीः प्रजावंतं यच्छतास्मासु देवीः ।
स्योनादा वः प्रतिबुध्यमानाः सुवीर्यस्य पतयः स्याम ॥ १० ॥

रयिं । दिवः । दुहितरः । विऽभातीः । प्रजाऽवंतं । यच्छत । अस्मासु । देवीः ।
स्योनात् । आ । वः । प्रतिऽबुध्यमानाः । सुऽवीर्यस्य । पतयः । स्याम ॥ १० ॥

तद्वो दिव इति व्युष्टायां जपेत् ।

तद्वो दिवो दुहितरो विभातीरुप ब्रुव उषसो यज्ञकेतुः ।
वयं स्याम यशसो जनेषु तद्द्यौर्धत्तां पृथिवी च देवी ॥ ११ ॥

तत् । वः । दिवः । दुहितरः । विऽभातीः । उप । ब्रुवे । उषसः । यज्ञऽकेतुः ।
वयं । स्याम । यशसः । जनेषु । तत् । द्यौः । च । धत्तां । पृथिवी । च । देवी ॥ ११ ॥



'ऋतेन ऋत' मिति [ पंचमेऽनुवाके ] नवर्चं षष्ठं सूक्तमात्रेयस्य श्रुतविद आर्षं त्रैष्टुभं मैत्रावरुणम् । विनियोगो लैङ्गिकः ॥

ऋतेन ऋतमपिहितं ध्रुवं वां सूर्यस्य यत्र विमुचंत्यश्वान् ।
दश शता सह तस्थुस्तदेकं देवानां श्रेष्ठं वपुषामपश्यं ॥ १ ॥

ऋतेन । ऋतं । अपिऽहितं । ध्रुवं । वां । सूर्यस्य । यत्र । विऽमुचंति । अश्वान् ।
दश । शता । सह । तस्थुः । तत् । एकं । देवानां । श्रेष्ठं । वपुषां । अपश्यं ॥ १ ॥

तत्सु वां मित्रावरुणा महित्वमीर्मा तस्थुषीरहभिर्दुदुह्रे ।
विश्वाः पिन्वथः स्वसरस्य धेना अनु वामेकः पविरा ववर्त ॥ २ ॥

तत् । सु । वां । मित्रावरुणा । महिऽत्वं । ईर्मा । तस्थुषीः ।
अहंऽभिः । दुदुह्रे ।
विश्वाः । पिन्वथः । स्वसरस्य । धेनाः । अनु । वां । एकः । पविः ।
आ । ववर्त ॥ २ ॥

अधारयतं पृथिवीमुत द्यां मित्रराजाना वरुणा महोभिः ।
वर्धयतमोषधीः पिन्वतं गा अव वृष्टिं सृजतं जीरदानू ॥३॥

अधारयतं । पृथिवीं । उत । द्यां । मित्रऽराजाना । वरुणा ।
महःऽभिः ।
वर्धयतं । ओषधीः । पिन्वतं । गाः । अव । वृष्टिं । सृजतं ।
जीरदानू इति जीरऽदानू ॥ ३ ॥

आ वामश्वासः सुयुजो वहंतु यतरश्मय उप यंत्ववार्क् ।
घृतस्य निर्णिगनु वर्तते वामुप सिंधवः प्रदिवि क्षरंति ॥४॥

आ । वां । अश्वासः । सुऽयुजः । वहंतु । यतऽरश्मयः । उप ।
यंतु । अर्वाक् ॥ ४ ॥
घृतस्य । निःऽनिक् । अनु । वर्तते । वां । उप । सिंधवः । प्रऽदिवि ।
क्षरंति ॥ ४ ॥

अनु श्रुताममतिं वर्धदुर्वी बर्हिरिव यजुषा रक्षमाणा ।
नमस्वंता धृतदक्षाधि गर्ते मित्रासाथे वरुणेळास्वंतः ॥ ५ ॥

अनु । श्रुतां । अमतिं । वर्धत् । उर्वीं । बर्हिःऽइव । यजुषा । रक्षमाणा ।
नमस्वंता । धृतऽदक्षा । अधि । गर्ते । मित्र । आसाथे इति । वरुण । इळासु । अंतरिति ॥ ५ ॥

**अक्रविहस्ता सुकृते परस्पा यं त्रासाथे वरुणेळास्वंतः ।**
**राजाना क्षत्रमहृणीयमाना सहस्रस्थूणं बिभृथः सह द्वौ ॥६॥**

अक्रविऽहस्ता । सुऽकृते । परःऽपा । यं । त्रासाथे इति । वरुणा । इळासु । अंतरिति ।
राजाना । क्षत्र । अहृणीयमाना । सहस्रऽस्थूणं । बिभृथः । सह । द्वौ ॥ ६ ॥

**हिरण्यनिर्णिगयो अस्य स्थूणा वि भ्राजते दिव्य १ श्वाजनीव ।**
**भद्रे क्षेत्रे निमिता तिल्विले वा सनेम मध्वो अधिगर्त्यस्य ॥७॥**

हिरण्यऽनिर्निक् । अयः । अस्य । स्थूणा । वि । भ्राजते । दिवि । अश्वाजनीऽइव ।
भद्रे । क्षेत्रे । निऽमिता । तिल्विले । वा । सनेम । मध्वः । अधिऽगर्त्यस्य ॥ ७ ॥

**हिरण्यरूपमुषसो व्युष्टावयःस्थूणमुदिता सूर्यस्य ।**
**आ रोहथो वरुण मित्र गर्तमतश्चक्षाथे अदितिं दितिं च ॥८॥**

हिरण्यऽरूपं । उषसः । विऽउष्टौ । अयःऽस्थूणं । उत्ऽइता । सूर्यस्य ।
आ । रोहथः । वरुण । मित्र । गर्तं । अतः । चक्षाथे इति । अदितिं । दितिं । च ॥ ८ ॥

दाक्षायणयज्ञे यद्बंहिष्ठमिति नवमी द्वितीयस्याममावास्यायां मैत्रावरुणस्य हविषो याज्या । मैत्रावरुणे पशौ हविष एषैव याज्या ।

**यद्बंहिष्ठं नातिविधे सुदानू अच्छिद्रं शर्म भुवनस्य गोपा ।**
**तेन नो मित्रावरुणावविष्टं सिषासंतो जिगीवांसः स्याम ॥९॥**

यत् । बंहिष्ठं । न । अतिऽविधे । सुदानू इति सुऽदानू । अच्छिद्रं । शर्म । भुवनस्य । गोपा ।
तेन । नः । मित्रावरुणौ । अविष्टं । सिसासंतः । जिगीवांसः । स्याम ॥ ९ ॥



अच्छा वदेति दशर्चं [षष्ठेऽनुवाके] एकादशं सूक्तं भौमस्यात्रेरार्षम् । यत्पर्जन्येत्येषा नवम्यनुष्टुप्, वि वृक्षानित्याद्यातिस्रो जगत्यः, शिष्टाःषट् त्रिष्टुभः । पर्जन्यो देवता । अनेन सूक्तेन प्रत्यृचं वा दिश उपस्थेयाः ॥

**अच्छा वद तवसं गीर्भिराभिः स्तुहि पर्जन्यं नमसा विवास ।**
**कनिक्रदद्वृषभो जीरदानू रेतो दधात्योषधीषु गर्भं ॥ १ ॥**

अच्छ॑ । वद॒ । त॒वस॑म् । गीः॒ऽभिः॑ । आ॒भिः । स्तु॒हि । प॒र्जन्य॑म् । नम॑सा । आ । वि॒वा॒स॒ ।

कनि॑क्रदत् । वृ॒ष॒भः । जी॒रऽदा॑नुः । रेतः॑ । द॒धा॒ति॒ । ओष॑धीषु । गर्भ॑म् ॥ १ ॥

वि वृ॒क्षान् ह॑न्त्यु॒त ह॑न्ति र॒क्षसो॒ विश्वं॑ बिभाय॒ भुव॑नं म॒हाव॑धात् ।

उ॒तानाँगा॒ ईषते॒ वृष्ण्या॑वतो॒ यत्प॒र्जन्यः॑ स्त॒नय॒न् हन्ति॑ दु॒ष्कृतः॑ ॥२॥

वि । वृ॒क्षान् । ह॒न्ति॒ । उ॒त । ह॒न्ति॒ । र॒क्षसः॑ । विश्व॑म् । बि॒भा॒य॒ । भुव॑नम् । म॒हाऽव॑धात् ।

उ॒त । अना॑गाः । ईष॒ते॒ । वृष्ण्य॑ऽवतः । यत् । प॒र्जन्यः॑ । स्त॒नय॑न् । हन्ति॑ । दुः॒ऽकृतः॑ ॥ २ ॥

र॒थीव॒ कश॒याश्वाँ॑ अभि॒क्षिप॒न्नावि॑र्दू॒तान्कृ॑णुते व॒र्ष्याँ॒३ अह॑ ।

दू॒रात्सिं॒हस्य॑ स्त॒नथा॒ उदी॑रते॒ यत्प॒र्जन्यः॑ कृणु॒ते व॒र्ष्यं१॒ नभः॑ ॥३॥

र॒थीऽइ॑न । कश॑या । अश्वा॑न् । अ॒भिऽक्षि॒पन् । आ॒विः । दू॒तान् । कृ॒णु॒ते॒ । व॒र्ष्या॑न् । अह॑ ।

दू॒रात् । सिं॒हस्य॑ । स्त॒नथाः॑ । उत् । ई॒र॒ते॒ । यत् । प॒र्जन्यः॑ । कृ॒णु॒ते॒ । व॒र्ष्य॑म् । नभः॑ ॥ ३ ॥

प्र वाता इति चतुर्थी पर्जन्यस्य चरोर्याज्या ।

प्र वाता वांति पतयंति विद्युत उदोषधीर्जिहते पिन्वते स्वः ।
इरा विश्वस्मै भुवनाय जायते यत्पर्जन्यः पृथिवीं रेतसावति
॥ ४ ॥

प्र । वाताः । वांति । पतयंति । विऽद्युतः । उत । ओषधीः ।
जिहते । पिन्वते । स्व १ रिति स्वः ।
इरा । विश्वस्मै । भुवनाय । जायते । यत् । पर्जन्यः । पृथिवीं । रेतसा ।
अवति ॥ ४ ॥

यस्य व्रते पृथिवी नंनमीति यस्य व्रते श॰वज्जर्भुरीति ।
यस्य व्रत ओषधीर्विश्वरूपाः स नः पर्जन्य महि शर्म यच्छ
॥ ५ ॥

यस्य । व्रते । पृथिवी । नंनमीति । यस्य । व्रते । शफऽवत् ।
जर्भुरिति ।
यस्य । व्रते । ओषधीः । विश्वऽरूपाः । सः । नः । पर्जन्य । महि ।
शर्म । यच्छ ॥ ५ ॥

दिवो नो वृष्टिं मरुतो ररीध्वं प्र पिन्वत वृष्णो अश्वस्य
धाराः ।
अ॰ङेतेन स्तनयित्नुनेह्यपो निषिंचन्नसुर पिता नः ॥ ६ ॥

दिवः । नः । वृष्टिं । मरुतः । ररीध्वं । प्र । पिन्वत । वृष्णः । अश्वस्य । धाराः ।
अर्वाङ् । एतेन । स्तनयित्नुना । आ । इहि । अपः । निऽसिंचन् । असुरः । पिता । नः ॥ ६ ॥

अभि क्रंद स्तनय गर्भमा धा उदन्वता परि दीया रथेन ।
दृतिं सु कर्ष विषितं न्यंचं समा भवंतूद्वतो निपादाः ॥७॥

अभि । क्रंद । स्तनय । गर्भं । आ । धाः । उदन्ऽवता । परि । दीय । रथेन ।
दृतिं । सु । कर्ष । विऽसितं । न्यंचं । समाः । भवंतु । उत्ऽवतः । निऽपादाः ॥ ७ ॥

महांतं कोशमुदचा नि षिंच स्यंदंतां कुल्या विषिताः पुरस्तात् ।
घृतेन द्यावापृथिवी व्युंधि सुप्रपाणं भवत्वघ्न्याभ्यः ॥ ८ ॥

महांतं । कोशं । उत् । अच । नि । सिंच । स्यंदंतां । कुल्याः । विऽसिताः । पुरस्तात् ।
घृतेन । द्यावापृथिवी इति । वि । उंधि । सुऽप्रपानं । भवतु । अघ्न्याभ्यः ॥ ८ ॥

यत्पर्जन्य कनिक्रदत्स्तनयन् हंसि दुष्कृतः ।
प्रतीदं विश्वं मोदते यत्किं च पृथिव्यामधि ॥ ९ ॥

यत् । पर्जन्य । कनिक्रदत् । स्तनयन् । हंसि । दुःऽकृतः ।
प्रति । इदं । विश्वं । मोदते । यत् । किं । च । पृथिव्यां । अधि
॥ ९ ॥

अवर्षीर्वर्षमुदु षू गृभायाकर्धन्वान्यत्येतवा उ ।
अजीजन ओषधीर्भोजनाय कमुत प्रजाभ्योऽविदो मनीषां
॥ १० ॥

अवर्षीः । वर्षं । उत् । ऊं इति । सु । गृभाय । अकः । धन्वानि ।
अतिऽएतवै । ऊं इति ।
अजीजनः । ओषधीः । भोजनाय । कं । उत । प्रऽजाभ्यः ।
अविदः । मनीषां ॥ १० ॥



बळित्थेति तृचात्मकं [ षष्ठेऽनुवाके ] द्वादशं सूक्तं भौमस्यात्रेरार्षं पृथिवी देवताकमानुष्टुभं । सूक्तविनियोगो लैङ्गिकः । आद्या देवानां हविष्षु पृथिव्या अनुवाक्या ।

बळित्था पर्वतानां खिद्रं बिभर्षि पृथिवि ।
प्र या भूमिं प्रवत्वति मह्ना जिनोषि महिनि ॥ १ ॥

बट् । इत्था । पर्वतानां । खिद्रं । बिभर्षि । पृथिवि ।
प्र । या । भूमिं । प्रवत्वति । मह्ना । जिनोषि । महिनि ॥ १ ॥

स्तोमासस्त्वा विचारिणि प्रति ष्टोभंत्यक्तुभिः ।
प्र या वाजं न हेषंतं पेरुमस्यस्यर्जुनि ॥ २ ॥

स्तोमासः । त्वा । विऽचारिणि । प्रति । स्तोभंति । अक्तुऽभिः ।
प्र । या । वाजं । न । हेषंतं । पेरुं । अस्यसि । अर्जुनि ॥ २ ॥

देवानां हविःषु दृळ्हा चिदिति पृथिव्या याज्या । एषैव भूमिस्तोमे-
निष्केवल्ये सूक्तमुखीया ।

दृळ्हा चिद्या वनस्पतीन्क्ष्मया दर्धर्ष्योजसा ।
यत्ते अभ्रस्य विद्युतो दिवो वर्षंति वृष्टयः ॥ ३ ॥

दृळ्हा । चित् । या वनस्पतीन् । क्ष्मया । दर्धर्षि । ओजसा ।
यत् । ते । अभ्रस्य । विऽद्युतः । दिवः । वर्षंति । वृष्टयः ॥३॥



'प्र सम्राज' इत्यष्टर्चं [ षष्ठेऽनुवाके ] त्रयोदशं सूक्तं मात्रेयं त्रैष्टुभं
वारुणम् । विनियोगो लैङ्गिकः ॥

प्र सम्राजे बृहदर्चा गभीरं ब्रह्म प्रियं वरुणाय श्रुताय ।
वि यो जघान शमितेव चर्मोपस्तिरे पृथिवीं सूर्याय ॥ १ ॥

प्र । संऽराजे । बृहत् । अर्च । गभीरं । ब्रह्म । प्रियं । वरुणाय ।
श्रुताय ।
वि । यः । जघान । शमिता ईव । चर्म । उपऽस्तिरे । पृथिवीं ।
सूर्याय ॥ १ ॥

वनेषु व्यं१तरिक्षं ततान वाजमर्वत्सु पय उस्रियासु ।
हृत्सु क्रतुं वरुणो अप्स्व१ग्निं दिवि सूर्यमदधात्सोममद्रौ ॥२॥

वनेषु । वि । अंतरिक्षं । ततान । वाजं । अर्वत्ऽसु । पयः ।
उस्रियासु ।
हृत्ऽसु । क्रतुं । वरुणः । अप्ऽसु । अग्निं । दिवि । सूर्यं । अदधात् ।
सोमं । अद्रौ ॥ २ ॥

नीचीनबारं वरुणः कवंधं प्र ससर्ज रोदसी अंतरिक्षं ।
तेन विश्वस्य भुवनस्य राजा यवं न वृष्टिर्व्युनत्ति भूम ॥ ३ ॥

नीचीनऽबारं । वरुणः । कवंधं । प्र । ससर्ज । रोदसी । इति ।
अंतरिक्षं ।
तेन । विश्वस्य । भुवनस्य । राजा । यवं । न । वृष्टिः । वि । उनत्ति ।
। भूम ॥ ३ ॥

उनत्ति भूमिं पृथिवीमुत द्यां यदा दुग्धं वरुणो वष्ट्यादित् ।
समभ्रेण वसत पर्वतासस्तविषीयंतः श्रथयंत वीराः ॥ ४ ॥

उनत्ति । भूमिं । पृथिवीं । उत । द्यां । यदा । दुग्धं । वरुणः । वष्टि । आत् । इत् ।

सं । अभ्रेण । वसत । पर्वतासः । तविषीऽयंतः । श्रथयंत । वीराः ॥ ४ ॥

इमामू ष्वासुरस्य श्रुतस्य महीं मायां वरुणस्य प्र वोचं ।
मानेनेव तस्थिवाँ अंतरिक्षे वि यो ममे पृथिवीं सूर्येण ॥५॥

इमां । ऊं इति । सु । आसुरस्य । श्रुतस्य । महीं । मायां । वरुणस्य । प्र । वोचं ।

मानेनऽइव । तस्थिऽवान् । अंतरिक्षे । वि । यः । ममे । पृथिवीं । सूर्येण ॥ ५ ॥

इमामू नु कवितमस्य मायां महीं देवस्य नकिरा दधर्ष ।
एकं यदुद्ना न पृणंत्येनीरासिंचंतीरवनयः समुद्रं ॥ ६ ॥

इमां । ऊं इति । नु । कविऽतमस्य । मायां । महीं । देवस्य । नकिः । आ । दधर्ष ।

एकं । यत् । उद्ना । न । पृणंति । एनीः । आऽसिंचंतीः । अवनयः । समुद्रं ॥ ६ ॥

अर्यम्यं वरुण मित्र्यं वा सखायं वा सदमिद्भ्रातरं वा ।
वेशं वा नित्यं वरुणारणं वा यत्सीमागश्चकृमा शिश्रथस्तत्
॥ ७ ॥

अर्यम्यं । वरुण । मित्र्यं । वा । सखायं । वा । सदं । इत् ।
भ्रातरं । वा ।
वेशं । वा । नित्यं । वरुण । अरणं । वा । यत् । सीं । आगः ।
चकृम । शिश्रथः । तत् ॥ ७ ॥

कितवासो यद्रिरिपुर्न दीवि यद्वा घा सत्यमुत यन्न विद्म ।
सर्वा ता वि ष्य शिथिरेव देवाधा ते स्याम वरुण
प्रियासः ॥ ८ ॥

कितवासः । यत् । रिरिपुः । न । दीवि । यत् । वा । घ । सत्यं ।
उत । यत् । न । विद्म ।
सर्वा । ता । वि । स्य । शिथिराऽइव । देव । अध । ते । स्याम ।
वरुण । प्रियासः ॥ ८ ॥

'शुक्रं त' इति चतुर्ऋचं [ पंचमेऽनुवाके ] नवमं सूक्तं भरद्वाजस्यार्षं पौष्णम् । द्वितीया जगती शिष्टास्त्रिष्टुभः । वैश्वदेवे पर्वणि वैश्वदेवस्य हविषः शुक्रं त इति याज्या । एकादशिनस्य पौष्णस्य पशोर्वपाया एषैव याज्या । अमाभिष्टवेऽप्येषा ।

शुक्रं ते अन्यद्यजतं ते अन्यद्विषुरूपे अहनी द्यौरिवासि ।
विश्वा हि माया अवसि स्वधावो भद्रा ते पूषन्निह रातिरस्तु ॥ १ ॥

शुक्रं । ते । अन्यत् । यजतं । ते । अन्यत् । विषुरूपे इति ।
विषुऽरूपे । अहनी इति । द्यौःऽइव । असि ।
विश्वाः । हि । मायाः । अवसि । स्वधाऽवः । भद्रा । ते । पूषन् ।
इह । रातिः । अस्तु ॥ १ ॥

**अजाश्वः पशुपा वाजपस्त्यो धियंजिन्वो भुवने विश्वे अर्पितः ।**
**अष्ट्रां पूषा शिथिरामुद्वरीवृजत्संचक्षाणो भुवना देव ईयते**
**॥ २ ॥**

अजऽअश्वः । पशुऽपाः । वाजऽपस्त्यः । धियंऽजिन्वः । भुवने ।
विश्वे । अर्पितः ।
अष्ट्रां । पूषा । शिथिरां । उत्ऽवरीवृजत् । संऽचक्षाणः । भुवना
। देवः । ईयते ॥ २ ॥

पौष्णस्य पशोर्वपापुरोडाशयोर्यास्ते पूषन्नित्यादिके द्वे ऋचावनुवाक्ये ।

**यास्ते पूषन्नावो अंतः समुद्रे हिरण्ययीरंतरिक्षे चरंति ।**
**ताभिर्यासि दूत्यां सूर्यस्य कामेन कृत श्रव इच्छमानः ॥ ३ ॥**

याः । ते । पूषन् । नावः । अंतरिति । समुद्रे । हिरण्ययीः ।
अंतरिक्षे । चरंति ।
ताभिः । यासि । दूत्यां । सूर्यस्य । कामेन । कृत । श्रवः । इच्छमानः ॥ ३ ॥

**पूषा सुबंधुर्दिव आ पृथिव्या इळस्पतिर्मघवा दस्मवर्चाः ।**
**यं देवासो अददुः सूर्यायै कामेन कृतं तवसं स्वंचं ॥ ४ ॥**

पूषा । सुऽबंधुः । दिवः । आ । पृथिव्याः । इळः । पतिः ।
मघऽवा । दस्मऽवर्चाः ।
यं । देवासः । अददुः । सूर्यायै । कामेन । कृतं । तवसं ।
सुऽअंचं ॥ ४ ॥



' युवां नरे ' ति दशर्चं [ पंचमेऽनुवाके ] त्रयोदशं सूक्तं वसिष्ठस्यार्षं जागतमैंद्रावरुणम् । आभिप्लविकेषूकथ्येषु स्तोमवृद्धौ प्रशास्तुरिदं सूक्तमावापार्थम् ।

**युवां नरा पश्यमानास आप्यं प्राचा गव्यंतः पृथुपर्शवो ययुः ।**
**दासा च वृत्रा हतमार्याणि च सुदासमिंद्रावरुणावसावतं ॥१॥**

युवां । नरा । पश्यमानासः । आप्यं । प्राचा । गव्यंतः ।
पृथुऽपर्शवः । ययुः ।
दासा । च । वृत्रा । हतं । आर्याणि । च । सुऽदासं । इंद्रावरुणा ।
अवसा । अवतं ॥ १ ॥

**यत्रा नरः समयंते कृतध्वजो यस्मिन्नाजा भवति किं चन प्रियं ।**
**यत्रा भयंते भुवना स्वर्दृशस्तत्रा न इंद्रावरुणाधि वोचतं ॥२॥**

यत्र । नरः । संऽअयंते । कृतऽध्वजः । यस्मिन् । आजा । भवति ।
किं । चन । प्रियं ।
यत्र । भयंते । भुवना । स्वःऽदृशः । तत्र । नः । इंद्रावरुणा । अधि ।
वोचतं ॥ २ ॥

सं भूम्या अंता ध्वसिरा अदृक्षतेंद्रावरुणा दिवि घोष आरुहत् ।
अस्थुर्जनानामुप मामरातयो ऽर्वागवसा हवनश्रुता गतं ॥३॥

सं । भूम्याः । अंताः । ध्वसिराः । अदृक्षत । इंद्रावरुणा । दिवि । घोषः । आ । अरुहत् ।
अस्थुः । जनानां । उप । मां । अरातयः । अर्वाक् । अवसा हवनऽश्रुता । आ । गतं ॥ ३ ॥

इंद्रावरुणा वधनाभिरप्रति भेदं वन्वंता प्र सुदासमावतं ।
ब्रह्माण्येषां शृणुतं हवीमनि सत्या तृत्सूनामभवत्पुरोहितिः ॥४॥

इंद्रावरुणा । वधनाभिः । अप्रति । भेदं । वन्वंता । प्र । सुऽदासं । आवतं ।
ब्रह्माणि । एषां । शृणुतं । हवीमानि । सत्या । तृत्सूनां । अभवत् । पुरःऽहितिः ॥ ४ ॥

इंद्रावरुणावभ्या तपंति माघान्यर्यो वनुषामरातयः ।
युवं हि वस्व उभयस्य राजथोऽध स्मा नोऽवतं पार्ये दिवि ॥ ५ ॥

इंद्रावरुणौ । अभि । आ । तपंति । मा । अघानि । अर्यः । वनुषां । अरातयः ।
युवं । हि । वस्वः । उभयस्य । राजथः । अध । स्म । नः । अवतं । पार्ये । दिवि ॥ ५ ॥

**युवा हवंत उभयास आजिष्विंद्रं च वस्वो वरुणं च सातये ।**
**यत्र राजभिर्दशभिर्निबाधितं प्र सुदासमावतं तृत्सुभिः सह॥६॥**

युवां । हवंते । उभयासः । आजिषु । इंद्रं । च । वस्वः । वरुणं ।
च । सातये ।

यत्र । राजऽभिः । दशऽभिः । निऽबाधितं । प्र । सुऽदासं ।
आवतं । तृत्सुऽभिः । सह ॥ ६ ॥

**दश राजानः समिता अयज्यवः सुदासमिंद्रावरुणा न युयुधुः ।**
**सत्या नृणामद्मसदामुपस्तुतिर्देवा एषामभवन्देवहूतिषु ७ ॥**

दश । राजानः । संऽइताः । अयज्यवः । सुऽदासं । इंद्रावरुणा । न ।
युयुधुः ।

सत्या । नृणां । अद्मऽसदां । उपऽस्तुतिः । देवाः । एषां ।
अभवन् । देवऽहूतिषु ॥ ७ ॥

**दाशराज्ञे परियत्ताय विश्वतः सुदास इंद्रावरुणावशिक्षतं ।**
**श्वित्यंचो यत्र नमसा कपर्दिनो धिया धीवंतो असपंत**
**तृत्सवः ॥ ८ ॥**

दाशऽराज्ञे । परिऽयत्ताय । विश्वतः । सुऽदासे । इंद्रावरुणौ ।
अशिक्षतं ।

श्वित्यंचः । यत्र । नमसा । कपर्दिनः । धिया । धीऽवंतः । असपंत ।
तृत्सवः ॥ ८ ॥

वृत्राण्यन्यः समिथेषु जिघ्नते व्रतान्यन्यो अभि रक्षते सदा।
हवामहे वां वृषणा सुवृक्तिभिरस्मे इंद्रावरुणा शर्म यच्छतं ॥९॥

वृत्राणि । अन्यः । संऽइथेषु । जिघ्नते । व्रतानि । अन्यः । अभि । रक्षते । सदा ।
हवामहे । वां । वृषणा । सुवृक्तिऽभिः । अस्मे इति । इंद्रावरुणा । शर्म । यच्छतं ॥ ९ ॥

अस्मे इंद्रो वरुणो मित्रो अर्यमा द्युम्नं यच्छंतु महि शर्म सप्रथः।
अवध्रं ज्योतिरदितेर्ऋतावृधो देवस्य श्लोकं सवितुर्मनामहे ॥ १० ॥

अस्मे इति । इंद्रः । वरुणः । मित्रः । अर्यमा । द्युम्नं । यच्छंतु । महि । शर्म । सऽप्रथः ।
अवध्रं । ज्योतिः । अदितेः । ऋतऽवृधः । देवस्य । श्लोकं । सवितुः । मनामहे ॥ १० ॥

---

'धीरात्वस्ये' त्यष्टर्चं [ पंचमेऽनुवाके ] षोडशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वरुणदेवत्यम् । आभिप्लविकेषूक्थ्येषु तृतीयसवने स्तोमवृद्धौ प्रशास्तुरिदमावापार्थम् ।

धीरात्वस्य महिना जनूंषि वि यस्तस्तंभ रोदसी चिदुर्वी।
प्र नाकमृष्वं नुनुदे बृहंतं द्विता नक्षत्रं पप्रथच्च भूम ॥ १ ॥

धीरा । तु । अस्य । महिना । जनूंषि । वि । यः । तस्तंभं ।
रोदंसी इति । चित् । उर्वी इति ।
प्र । नाकं । ऋष्वं । नुनुदे । बृहंतं । द्विता । नक्षंत्रं । पप्रथंत् ।
च । भूमं ॥ १ ॥

उत स्वया तन्वा३ सं वंदे तत्कदा न्वं१ तर्वरुणे भुवानि।
किं मे हव्यमहृणानो जुषेत कदा मृळीकं सुमना अभिख्यं
॥ २ ॥

उत । स्वया । तन्वा । सं । वदे । तत् । कदा । नु । अंतः ।
वरुणे । भुवानि ।
किं । मे । हव्यं । अहृणानः । जुषेत । कदा । मृळीकं । सुऽमनाः ।
अभि । ख्यं ॥ २ ॥

पृच्छे तदेनो वरुण दिदृक्षूपो एमि चिकितुषो विपृच्छं ।
समानमिन्मे कवयंश्चिदाहुरयं ह तुभ्यं वरुणो हृणीते ॥ ३ ॥

पृच्छे । तत् । एनः । वरुण । दिदृक्षु । उपो इति । एमि । चिकितुषः ।
विऽपृच्छं ।
समानं । इत् । मे । कवयः । चित् । आहुः । अयं । ह । तुभ्यं ।
वरुणः । हृणीते ॥ ३ ॥

किमाग आस वरुण ज्येष्ठं यत्स्तोतारं जिघांससि सखायं ।
प्र तन्मे वोचो दूळभ स्वधावोऽव त्वानेना नमसा तुर इयां ॥४॥

किं । आगः । आस । वरुण । ज्येष्ठं । यत् । स्तोतारं । जिघांससि । सखायं ।
प्र । तत् । मे । वोचः । दुःऽदभ । स्वधाऽवः । अव । त्वा । अनेनाः । नमसा । तुरः । इयां ॥ ४ ॥

अव द्रुग्धानि पित्र्या सृजा नोऽव या वयं चकृमा तनूभिः ।
अव राजन्पशुतृपं न तायुं सृजा वत्सं न दाम्नो वसिष्ठं ॥५॥

अव । द्रुग्धानि । पित्र्या । सृज । नः । अव । या । वयं । चकृम । तनूभिः ।
अव । राजन् । पशुऽतृपं । न । तायुं । सृज । वत्सं । न । दाम्नः । वसिष्ठं ॥ ५ ॥

न स स्वो दक्षो वरुण ध्रुतिः सा सुरा मन्युर्विभीदको अचित्तिः ।
अस्ति ज्यायान्कनीयस उपारे स्वप्नश्चनेदनृतस्य प्रयोता ॥६॥

न । सः । स्वः । दक्षः । वरुण । ध्रुतिः । सा । सुरा । मन्युः । विऽभीदकः । अचित्तिः ।
अस्ति । ज्यायान् । कनीयसः । उपऽअरे । स्वप्नः । चन । इत् । अनृतस्य । प्रऽयोता ॥ ६ ॥

अरं दासो न मीळ्हुषे कराण्यहं देवाय भूर्णयेऽनागाः ।

अचेतयदचितो देवो अर्यो गृत्सं राये कवितरो जुनाति ॥७॥

अरं । दासः । न । मीळ्हुषे । कराणि । अहं । देवाय । भूर्णये ।
अनागाः ।

अचेतयत् । अचितः । देवः । अर्यः । गृत्सं । राये । कविऽतरः ।
जुनाति ॥ ७ ॥

एकादशिने वारुणे पशावयमिति पुरोडाशस्यानुवाक्या ॥

अयं सु तुभ्यं वरुण स्वधावो हृदि स्तोम उपश्रितश्चिदस्तु ।

शं नः क्षेमे शमु योगे नो अस्तु यूयं पात स्वस्तिभिः सदा
नः ॥ ८ ॥

अयं । सु । तुभ्यं । वरुण । स्वधाऽवः । हृदि । स्तोमः । उपऽश्रितः
चित् । अस्तु ।

शं । नः । क्षेमे । शं । ऊं इति । योगे । नः । अस्तु । यूयं ।
पात । स्वस्तिऽभिः । सदा । नः ॥ ८ ॥



प्र शुंध्युवमिति सप्तर्चं [पंचमेऽनुवाके] अष्टादशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वारुणम् । गतो विनियोगः ॥

प्र शुंध्युवं वरुणाय प्रेष्ठां मतिं वसिष्ठ मीळ्हुषे भरस्व ।

य ईमर्वाञ्चं करते यजत्रं सहस्रामघं वृषणं बृहंतं ॥ १ ॥

प्र । शुन्ध्युवं । वरुणाय । प्रेष्ठां । मतिं । वसिष्ठ । मीळ्हुषे । भरस्व ।
यः । ईं । अर्वाचं । करते । यजत्रं । सहस्रऽमघं । वृषणं । बृहंतं
॥ १ ॥

अधा न्वस्य संदृशं जगन्वानग्नेरनीकं वरुणस्य मंसि ।
स्व १ र्यदश्मन्नधिपा उ अंधोऽभि मा वपुर्दृशये निनीयात्
॥ २ ॥

अधं । नु । अस्य । संऽदृशं । जगन्वान् । अग्नेः । अनीकं ।
वरुणस्य । मंसि ।

स्वः । यत् । अश्मन् । अधिऽपाः । ऊं इति । अंधः । अभि । मा ।
वपुः । दृशये । निनीयात् ॥ २ ॥

आ यद्रुहाव वरुणश्च नावं प्र यत्समुद्रमीरयाव मध्यं ।
अधि यदपां स्नुभिश्चराव प्र प्रेंख ईंखयावहै शुभे कं ॥ ३ ॥

आ । यत् । रुहाव । वरुणः । च । नावं । प्र । यत् । समुद्रं ।
ईरयाव । मध्यं ।

अधि । यत् । अपां । स्नुऽभिः । चराव । प्र । प्रऽईंखे । ईंखयावहै ।
शुभे । कं ॥ ३ ॥

वसिष्ठं ह वरुणो नाव्याधादृषिं चकार स्वपा महोभिः ।
स्तोतारं विप्रः सुदिनत्वे अन्हां यान्नु द्यावस्ततनन्यादुषासः
॥ ४ ॥

वसिष्ठं । ह । वरुणः । नावि । आ । अधात् । ऋषिं । चकार ।
सुऽअपाः । महःऽभिः ।

स्तोतारं । विप्रः । सुदिनऽत्वे । अन्हां । यात् । नु । द्यावः ।
ततनन् । यात् । उषसः ॥ ४ ॥

क १ त्यानि नौ सख्या बभूवुः सचावहे यदवृकं पुराचित् ।
बृहंतं मानं वरुण स्वधावः सहस्रद्वारं जगमा गृहं ते ॥ ५ ॥

क्व । त्यानि । नौ । सख्या । बभूवुः । सचावहे इति । यत् ।
अवृकं । पुरा । चित् ।

बृहंतं । मानं । वरुण । स्वधाऽवः । सहस्रऽद्वारं । जगम । गृहं ।
ते ॥ ५ ॥

य आपिर्नित्यो वरुण प्रियः सन्त्वामागांसि कृणवत्सखा ते ।
मा त एनस्वंतो यक्षिन्भुजेम यंधि ष्मा विप्रः स्तुवते वरूथं
॥ ६ ॥

यः । आपिः । नित्यः । वरुण । प्रियः । सन् । त्वां । आगांसि ।
कृणवत् । सखा । ते ।
मा । ते । एनस्वंतः । यक्षिन् । भुजेम । यंधि । स्म । विप्रः ।
स्तुवते । वरूथं ॥ ६ ॥

अत्र ऋग्विधानं । ध्रुवासु त्वासु क्षितिषु जपन् बंधात् प्रमुच्यते । तिष्ठन्रात्री जपेदेतां पिशाचस्तं न गच्छति ॥

ध्रुवासु त्वासु क्षितिषु क्षियंतो व्य १ स्मत्पाशं वरुणो मुमोचत् ।
अवो वन्वाना अदितेरुपस्थाद्यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

ध्रुवासु । त्वा । आसु । क्षितिषु । क्षियंतः । वि । अस्मत् । पाशं ।
वरुणः । मुमोचत् ।
अवः । वन्वानाः । अदितेः । उपऽस्थात् । यूयं । पात । स्वस्तिऽभिः ।
सदा । नः ॥ ७ ॥



यत्स्थ इति षळृचं [ द्वितीयेऽनुवाके ] पंचमं सूक्तं कण्वपुत्रस्य प्रगाथस्यार्षं माश्विनम् । आद्या बृहती । द्वितीया मध्येज्योतिस्त्रिष्टुप् । तृतीयाऽनुष्टुप् । चतुर्थ्यास्तारपंक्तिः । पंचमी बृहती षष्ठी सतोबृहती । प्रातरनुवाकाश्विने क्रतौ बार्हते छंदस्याश्विनशस्त्रे चेदं सूक्तम् ।

यत्स्थो दीर्घप्रसद्मनि यद्वादो रोचने दिवः ।
यद्वा समुद्रे अध्याकृते गृहेऽत आ यातमश्विना ॥ १ ॥

यत् । स्थः । दीर्घऽप्रसद्मनि । यत् । वा । अदः । रोचने । दिवः ।
यत् । वा । समुद्रे । अधि । आऽकृते । गृहे । अतः । आ । यातं ।
अश्विना ॥ १ ॥

यद्वा यज्ञं मनवे संमिमिक्षथुरेवेत्काणवस्य बोधतं ।
बृहस्पतिं विश्वान्देवाँ अहं हुव इंद्राविष्णू अश्विनावाशुहेषसा
॥ २ ॥

यत् । वा । यज्ञं । मनवे । संऽमिमिक्षथुः । एव । इत् । काणवस्य ।
बोधतं । बृहस्पतिं । विश्वान् । देवान् । अहं । हुवे । इंद्राविष्णू इति ।
अश्विनौ । आशुऽहेषसा ॥ २ ॥

त्या न्व १ श्विना हुवे सुदंससा गृभे कृता ।
ययोरस्ति प्र णः सख्यं देवेष्वध्याप्यं ॥ ३ ॥

त्या । नु । अश्विना । हुवे । सुऽदंससा । गृभे । कृता । ययोः ।
अस्ति । प्र । नः । सख्यं । देवेषु । अधि । आप्यं ॥ ३ ॥

ययोरधि प्र यज्ञा असूरे संति सूरयः ।
ता यज्ञस्याध्वरस्य प्रचेतसा स्वधाभिर्या पिबतः सोम्यं मधु ॥ ४ ॥

ययोः । अधि । प्र । यज्ञाः । असूरे । संति । सूरयः ।
ता । यज्ञस्य । अध्वरस्य । प्रऽचेतसा । स्वधाभिः । या । पिबतः ।
सोम्यं । मधु ॥ ४ ॥

य द्वामिन पाम्यस्माकस्थो वाजिनीवसू ।

यद्द्रुह्यव्यनवि तुर्वशे यदौ हुवे वामथ मा गतं ॥ ५ ॥

यत् । अद्य । अश्विनौ । अपाक् । यत् । प्राक् । स्थः ।

वाजिनीवसू इति वाजिनीऽवसू ।

यत् । द्रुह्यवि । अनवि । तुर्वशे । यदौ । हुवे । वां । अथ । मा ।

आ । गतं ॥ ५ ॥

य तरिक्षे पतथः पुरुभुजा यद्वेमे रोदसी अनु ।

यद्वा स्वधाभिरधितिष्ठथो रथमत आ यातमश्विना ॥ ६ ॥

यत् । अंतरिक्षे । पतथः । पुरुऽभुजा । यत् । वा । इमे इति । रोदसी

इति । अनु ।

यत् । वा । स्वधाभिः । अधिऽतिष्ठथः । रथं । अतः । आ । यातं ।

अश्विना ॥ ६ ॥



उपास्मा इति नवर्चं [प्रथमेऽनुवाके] एकादशं सूक्तम् । असितो देवल ऋषिः । तो व क यपगोत्रजा । गायत्रं छंदः । सोमःपवमानो देवता । प्रावस्तोत्रेऽर्बुदसूक्तस्य प्रागुत्तमाया इदमादिकं सर्वं पावमानं विकल्पेनाशंसनीयं ॥ अभिप्लवे धर्मकुधावत्तेऽपनीयमाने नमसे दु पे त्येषा ।

उ स्मै गायता नरः पवमानायेंदवे । अभि देवाँ इयक्षते ॥१॥

उप । अस्मै । गायत । नरः । पवमानाय । इंदवे । अभि । देवान् ।

इयक्षते ॥ १ ॥

अभि ते मधुना पयोऽथर्वाणो अशिश्रयुः । देवं देवाय देवयु ॥२॥

अभि । ते । मधुना । पयः । अथर्वाणः । अशिश्रयुः । देवं । देवाय । देवऽयु ॥ २ ॥

स नः पवस्व शं गवे शं जनाय शमर्वते । शं राजन्नोषधीभ्यः ॥ ३ ॥

सः । नः । पवस्व । शं । गवे । शं । जनाय । शं । अर्वते । शं । राजन् । ओषधीभ्यः ॥ ३ ॥

बभ्रवे नु स्वतवसेऽरुणाय दिविस्पृशे । सोमाय गाथमर्चत ॥ ४ ॥

बभ्रवे । नु । स्वऽतवसे । अरुणाय । दिविऽस्पृशे । सोमाय । गाथं । अर्चत ॥ ४ ॥

हस्तच्युतेभिरद्रिभिः सुतं सोमं पुनीतन । मधावा धावता मधु ॥ ५ ॥

हस्तऽच्युतेभिः । अद्रिऽभिः । सुतं । सोमं । पुनीतन । मधौ । आ । धावत । मधु ॥ ५ ॥

नमसेदुप सीदत दध्नेदभि श्रीणीतन । इंदुमिंद्रे दधातन ॥ ६ ॥

नमसा । इत् । उप । सीदत । दध्ना । इत् । अभि । श्रीणीतन । इंदुं । इंद्रे । दधातन ॥ ६ ॥

आमित्रहा [illegible] षणिः पवस्व सोम शं गवे । देवेभ्यो अनुकामकृत् ॥ ७ ॥

अमित्रऽहा । विऽचर्षणिः । पर्वस्व । सोम । शं । गवे । देवेभ्यः ।
अनुत्तमऽकृत् ॥ ७ ॥

इंद्राय सोम पातवे मदाय परि षिच्यसे। मनश्चिन्मनसस्पतिः
॥ ८ ॥

इंद्राय । सोम । पातवे । मदाय । परि । सिच्यसे । मनःऽचित् ।
मनसः । पतिः ॥ ८ ॥

पवमान सुवीर्यं रयिं सोम रिरीहि नः। इंदविंद्रेण नो युजा॥९॥

पवमान । सुऽवीर्यं । रयिं । सोम । रिरीहि । नः । इंदो इति ।
इंद्रेण । नः । युजा ॥ ९ ॥



परेयिवांसमिति षोडशर्चं चतुर्दशं सूक्तं विवस्वतः पुत्रस्य यमस्यार्षं। अंगिरसो नः पितरो नवग्वा इति षष्ठ्या अंगिरः पित्रथर्वभृगुलक्षणा लिंगोक्ता देवताः। प्रे हीत्याद्यास्तिस्रो लिंगोक्तदेवताकाः पितृदेवताका वा। अतिद्रवसारमेयावित्यादिकस्तृचः सरमापुत्रौ यौ श्वानौ परलोकमार्गमभितः स्थितौ तद्देवताकः। शिष्टा यमदेवत्याः। यमाय सोममिति त्रयोदश्याद्या अनुष्टुभः। यमाय मधुमत्तममित्येषा बृहती। आदितो द्वादश त्रिष्टुभः। प्रातरनुवाकाश्विनशस्त्रयोरुक्तः सूक्तविनियोगः। महापितृयज्ञे यमयागाख्या याज्या।

परेयिवांसं प्रवतो महीरनु बहुभ्यः पंथामनुपस्पशानं।
वैवस्वतं संगमनं जनानां यमं राजानं हविषा दुवस्य ॥१॥

परेयिऽवांसं । प्रऽवतः । महीः । अनु । बहुऽभ्यः । पंथां ।
अनुऽपस्पशानं ।
वैवस्वतं । संऽगमनं । जनानां । यमं । राजानं । हविषा ।
दुवस्य ॥ १ ॥

यमो नो गातुं प्रथमो विवेद नैषा गव्यूतिरपभर्तवा उं ।
यत्रा नः पूर्वे पितरः परेयुरेना जज्ञानाः पथ्या३ अनु स्वाः ॥२॥

यमः । नः । गातुं । प्रथमः । विवेद । न । एषा । गव्यूतिः ।
अपऽभर्तवै । उं इति ।
यत्रं । नः । पूर्वे । पितरः । पराऽईयुः । एना । जज्ञानाः । पथ्याः ।
अनु । स्वाः ॥ २ ॥

आग्निमारुते मातली कव्यैरित्येषा धाय्या ।

मातली कव्यैर्यमो अंगिरोभिर्बृहस्पतिर्ऋक्वभिर्वावृधानः ।
यांश्च देवा वावृधुर्ये च देवान्त्स्वाहान्ये स्वधयान्ये मदंति ॥३॥

मातली । कव्यैः । यमः । अंगिरःऽभिः । बृहस्पतिः । ऋक्वऽभिः ।
ववृधानः ।
यान् । च । देवाः । ववृधुः । ये । च । देवान् । स्वाहा । अन्ये ।
स्वधया । अन्ये । मदंति ॥ ३ ॥

महापितृयज्ञे ...म यमेत्यादिके द्वे अनुवाक्ये । सेनाग्निमारुतेऽपि धाय्या ।

इमं यम प्रस्तरमा हि सीदांगिरोभिः पितृभिः संविदानः ।
आ त्वा मंत्राः कविशस्ता वहंत्वेना राजन्हविषा मादयस्व ॥४॥

इमं । यम । प्रऽस्तरं । आ । हि । सीद । अंगिरःऽभिः । पितृऽभिः ।
संऽविदानः ।

आ । त्वा । मंत्राः । कविऽशस्ताः । वहंतु । एना । राजन् ।
हविषा । मादयस्व ॥ ४ ॥

अंगिरोभिरा गहि यज्ञियेभिर्यम वैरूपैरिह मादयस्व ।
विवस्वंतं हुवे यः पिता तेऽस्मिन्यज्ञे बर्हिष्या निषद्य ॥ ५ ॥

अंगिरःऽभिः । आ । गहि । यज्ञियेभिः । यम । वैरूपैः । इह ।
मादयस्व ।

विवस्वंतं । हुवे । यः । पिता । ते । अस्मिन् । यज्ञे । बर्हिषि ।
आ । निऽसद्य ॥ ५ ॥

अंगिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः ।
तेषां वयं सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम ॥ ६ ॥

अंगिरसः । नः । पितरः । नवऽग्वाः । अथर्वाणः भृगवः ।
सोम्यासः ।

तेषां । वयं । सुऽमतौ । यज्ञियानां । अपि । भद्रे । सौमनसे ।
स्याम ॥ ६ ॥

सत्रमध्ये दीक्षितस्य मरणे प्रेहीत्याद्याः पंचर्चस्तृतीयावार्जिता होत्रा शंसनीयाः ।

प्रेहि प्रेहि पथिभिः पूर्व्येभिर्यत्रा नः पूर्वे पितरः परेयुः ।
उभा राजाना स्वधया मदन्ता यमं पश्यासि वरुणं च देवं ॥ ७ ॥

प्र । इहि । प्र । इहि । पथिऽभिः । पूर्व्येभिः । यत्र । नः । पूर्वे । पितरः । पराऽईयुः ।
उभा । राजाना । स्वधया । मदन्ता । यमं । पश्यासि । वरुणं । च । देवं ॥ ७ ॥

सं गच्छस्व पितृभिः सं यमेनेष्टापूर्तेन परमे व्योमन् ।
हित्वायावद्यं पुनरस्तमेहि सं गच्छस्व तन्वा सुवर्चाः ॥८॥

सं । गच्छस्व । पितृऽभिः । सं । यमेन । इष्टापूर्तेन । परमे । विऽओमन् ।
हित्वाय । अवद्यं । पुनः । अस्तं । आ । इहि । सं । गच्छस्व । तन्वा । सुऽवर्चाः ॥ ८ ॥

पैतृमेधिके कर्मणि श्मशानायतनं प्रोक्षत्यपेत वीतेति ।

अपेत वीत वि च सर्पतातोऽस्मा एतं पितरो लोकमक्रन् ।
अहोभिरद्भिरक्तुभिर्व्यक्तं यमो ददात्यवसानमस्मै ॥ ९ ॥

अप । इत । वि । इत । वि । च । सर्पत । अतः । अस्मै । एतं । पितरः । लोकं । अक्रन् ।

अहःऽभिः । अत्ऽभिः । अक्तुऽभिः । विऽअक्त । यमः । ददाति । अवऽसानं । अस्मै ॥ ९ ॥

अनुस्तरण्या वृक्कौ पार्श्वयोराम्रफलाकृती । तावुद्धृत्य प्रेतस्य हस्तयोर्निदधात्यति द्रव सारमेयाविति द्वाभ्यां ।

अति द्रव सारमेयौ श्वानौ चतुरक्षौ शबलौ साधुना पथा ।
अथा पितॄन्त्सुविदत्राँ उपेहि यमेन ये सधमादं मदंति ॥१०॥

अति । द्रव । सारमेयौ । श्वानौ । चतुःऽअक्षौ । शबलौ । साधुना । पथा ।

अथ । पितॄन् । सुऽविदत्रान् । उप । इहि । यमेन । ये । सधऽमादं । मदंति ॥ १० ॥

यौ ते श्वानौ यम रक्षितारौ चतुरक्षौ पथिरक्षी नृचक्षसौ ।
ताभ्यामेनं परि देहि राजन्त्स्वस्ति चास्मा अनमीवं च धेहि ॥११॥

यौ । ते । श्वानौ । यम । रक्षितारौ । चतुःऽअक्षौ । पथिरक्षी इति पथिऽरक्षी । नृऽचक्षसौ ।

ताभ्यां । एनं । परि । देहि । राजन् । स्वस्ति । च । अस्मै । अनमीवं । च । धेहि ॥ ११ ॥

उरूणसावसुतृपा उदुंबलौ यमस्य दूतौ चरतो जनाँ अनु ।
तावस्मभ्यं दृशये सूर्याय पुनर्दातामसुमद्येह भद्रं ॥ १२ ॥

उरुऽनसौ । असुऽतृपौ । उदुंबलौ । यमस्य । दूतौ । चरतः । जनान् । अनु ।
तौ । अस्मभ्यं । दृशये । सूर्याय । पुनः । दातां । असुं । अद्य । इह । भद्रं ॥ १२ ॥

यमाय सोमं सुनुत यमाय जुहुता हविः ।
यमं ह यज्ञो गच्छत्यग्निदूतो अरंकृतः ॥ १३ ॥

यमाय । सोमं । सुनुत । यमाय । जुहुत । हविः ।
यमं । ह । यज्ञः । गच्छति । अग्निऽदूतः अरंऽकृतः ॥ १३ ॥

यमाय घृतवद्धविर्जुहोत प्र च तिष्ठत ।
स नो देवेष्वा यमद्दीर्घमायुः प्र जीवसे ॥ १४ ॥

यमाय । घृतऽवत् । हविः । जुहोत । प्र । च । तिष्ठत ।
सः । नः । देवेषु । आ । यमत् । दीर्घं । आयुः । प्र । जीवसे ॥ १४ ॥

यमाय मधुमत्तमं राज्ञे हव्यं जुहोतन ।
इदं नम ऋषिभ्यः पूर्वजेभ्यः पूर्वेभ्यः पथिकृद्भ्यः ॥ १५ ॥

यमाय । मधुमत्ऽतमं । राज्ञे । हव्यं । जुहोतन । इदं । नमः । ऋषिऽभ्यः । पूर्वऽजेभ्यः । पूर्वेभ्यः । पथिकृत्ऽभ्यः ॥ १५ ॥

त्रिकद्रुकेभिः पतति षळुर्वीरेकमिद्बृहत् ।
त्रिष्टुब्गायत्री छंदांसि सर्वा ता यम आहिता ॥ १६ ॥

त्रिऽकद्रुकेभिः । पतति । षट् । उर्वीः । एकं । इत् । बृहत् । त्रिऽस्तुप् । गायत्री । छंदांसि । सर्वा । ता । यमे । आऽहिता ॥ १६ ॥



प्रावेपा इति चतुर्दशर्चं [ तृतीयेऽनुवाके ] पंचमं सूक्तमैलूषस्य कवषस्यार्षं मुजवतः पुत्रस्याक्षाख्यस्य वा। सप्तमी जगती शिष्टास्त्रयोदश त्रिष्टुभः । अत्र द्वादश्यक्षान् स्तौति नवम्याद्या च सप्तमी । अतस्ता-स्तद्देवत्याः । त्रयोदशी कृषिं स्तौति । अतस्तस्याः सा देवता । एवं पंच गताः। शिष्टाभिर्नवभिः कितवोऽक्षाश्च निंद्यन्ते अतस्ता अपि तद्देवत्याः॥

प्रावेपा मा बृहतो मादयंति प्रवातेजा इरिणे वर्वृतानाः ।
सोमस्येव मौजवतस्य भक्षो विभीदको जागृविर्मह्यमच्छान् ॥ १ ॥

प्रावेपाः । मा । बृहतः । मादयंति । प्रवातेऽजाः । इरिणे । वर्वृतानाः । सोमस्यऽइव । मौजऽवतस्य । भक्षः । विऽभीदकः । जागृविः । मह्यं । अच्छान् ॥ १ ॥

न मा मिमेथ न जिहीळ एषा शिवा सखिभ्य उत मह्यमासीत् ।
अक्षस्याहमेकपरस्य हेतोरनुव्रतामप जायामरोधं ॥ २ ॥

न । मा । मिमेथ । न । जिहीळे । एषा । शिवा । सखिऽभ्यः ।
उत । मह्यं । आसीत् ।
अक्षस्य । अहं । एकऽपरस्य । हेतोः । अनुऽव्रतां । अप । जायां ।
अरोधं ॥ २ ॥

द्वेष्टि श्वश्रूरप जाया रुणद्धि न नाथितो विंदते मर्डितारं ।
अश्वस्येव जरतो वस्न्यस्य नाहं विंदामि कितवस्य भोगं ॥३॥

द्वेष्टि । श्वश्रूः । अप । जाया । रुणद्धि । न । नाथितः । विंदते ।
मर्डितारं ।
अश्वस्यऽइव । जरतः । वस्न्यस्य । न । अहं । विंदामि । कितवस्य ।
भोगं ॥ ३ ॥

अन्ये जायां परि मृशंत्यस्य यस्यागृधद्वेदने वाज्य१क्षः ।
पिता माता भ्रातर एनमाहुर्न जानीमो नयता बद्धमेतं ॥४॥

अन्ये । जायां । परि । मृशंति । अस्य । यस्य । अगृधत् । वेदने ।
वाजी । अक्षः ।
पिता । माता । भ्रातरः । एनं । आहुः । न । जानीमः । नयत ।
बद्धं । एतं ॥ ४ ॥

यदादीध्ये न दविषाण्येभिः परायद्भ्योऽव हीये सखिभ्यः ।
न्युप्ताश्च बभ्रवो वाचमक्रतँ एमीदेषां निष्कृतं जारिणीव ॥५॥

यत् । आऽदीध्ये । न । दविषाणि । एभिः । पराय॒त्ऽभ्यः । अव॑ ।
हीये । सखिऽभ्यः ।
निऽउ॑प्ताः । च । ब॒भ्रवः । वाच॑म् । अक्र॑त । एमि॑ । इत् । एषाम् ।
निःऽकृतम् । जारिणीऽइव ॥ ५ ॥

सभामेति कितवः पृच्छमानो जेष्यामीति तन्वा३ शूशुजानः ।
अक्षासो अस्य वि तिरंति कामं प्रतिदीव्ने दधत आ कृतानि ॥६॥

सभाम् । एति । कितवः । पृच्छमानः । जेष्यामि । इति । तन्वा ।
शूशुजानः ।
अक्षासः । अस्य । वि । तिरंति । कामम् । प्रतिऽदीव्ने । दधतः ।
आ । कृतानि ॥ ६ ॥

अक्षास इदंकुशिनो नितोदिनो निकृत्वानस्तपनास्तापयिष्णवः ।
कुमारदेष्णा जयतः पुनर्हणो मध्वा संपृक्ताः कितवस्य
बर्हणा ॥ ७ ॥

अक्षासः । इत् । अंकुशिनः । निऽतोदिनः । निऽकृत्वानः ।
तपनाः । तापयिष्णवः ।
कुमारऽदेष्णाः । जयतः । पुनःऽहनः । मध्वा । संऽपृक्ताः ।
कितवस्य । बर्हणा ॥ ७ ॥

त्रिपंचाशः क्रीळति व्रात एषां देव इंव सविता सत्यधर्मा।
उग्रस्य चिन्मन्यवे ना नमंते राजा चिदेभ्यो नम इत्कृणोति॥८॥

त्रिऽपंचाशः। क्रीळति। व्रातः। एषां। देवःऽइंव। सविता।
सत्यऽधर्मा।
उग्रस्य। चित्। मन्यवे। न। नमंते। राजा। चित्। एभ्यः। नमः।
इत्। कृणोति॥ ८॥

नीचा वर्तंत उपरिं स्फुरंत्यहस्तासो हस्तंवंतं सहंते।
दिव्या अंगारा इरिणे न्युंप्ताः शीताः संतो हृदयं निर्दहंति॥९॥

नीचा। वर्तंते। उपरि। स्फुरंति। अहस्तासः। हस्तंऽवंतं। सहंते।
दिव्याः। अंगाराः। इरिणे। निऽउंप्ताः। शीताः। संतः। हृदयं।
निः। दहंति॥ ९॥

जाया तंप्यते कितवस्यं हीना माता पुत्रस्य चरतः क्वं स्वित्।
ऋणावा बिभ्यद्धनमिच्छमानोऽन्येषामस्तमुप नक्तमेति॥१०॥

जाया। तप्यते। कितवस्य। हीना। माता। पुत्रस्यं। चरतः।
क्वं। स्वित्।
ऋणऽवा। बिभ्यंत्। धनं। इच्छमानः। अन्येषां। अस्तं। उपं।
नक्तं। एति॥ १०॥

स्त्रियं दृष्ट्वाय कितवं ततापान्येषां जायां सुकृतं च योनिं ।
पूर्वाण्हे अश्वान्युयुजे हि बभ्रून्त्सो अग्नेरंते वृषलः पपाद॥११॥

स्त्रियं । दृष्ट्वाय । कितवं । तताप । अन्येषां । जायां । सुऽकृतं ।
च । योनिं ।

पूर्वाण्हे । अश्वान् । युयुजे । हि । बभ्रून् । सः ; अग्नेः । अंते ।
वृषलः । पपाद ॥ ११ ॥

यो वः सेनानीर्महतो गणस्य राजा व्रातस्य प्रथमो बभूव ।
तस्मै कृणोमि न धना रुणध्मि दशाहं प्राचीस्तदृतं वदामि॥१२॥

यः । वः । सेनाऽनीः । महतः । गणस्य । राजा । व्रातस्य ।
प्रथमः । बभूव ।

तस्मै । कृणोमि । न । धना । रुणध्मि । दश । अहं । प्राचीः ।
तत् । ऋतं । वदामि ॥ १२ ॥

अक्षैर्मा दीव्यः कृषिमित्कृषस्व वित्ते रमस्व बहु मन्यमानः ।
तत्र गावः कितव तत्र जाया तन्मे वि चष्टे सवितायमर्यः ॥१३॥

अक्षैः । मा । दीव्यः । कृषिं । इत् । कृषस्व । वित्ते । रमस्व ।
बहु । मन्यमानः ।

तत्र । गावः । कितव । तत्र । जाया । तत् । मे । वि । चष्टे ।
सविता । अयं । अर्यः ॥ १३ ॥

मित्रं कृणुध्वं खलुं मृळतां नो मा नो घोरेण चरताभि धृष्णु ।
नि वो नु मन्युर्विंशतामरातिरन्यो बंभ्रूणां प्रसितौ न्वस्तु ॥१४॥

मित्रं । कृणुध्वं । खलुं । मृळतं । नः । मा । नः । घोरेणं । चरत ।
अभि । धृष्णु ।
नि । वः । नु । मन्युः । विशतां । अरातिः । अन्यः । बभ्रूणां ।
प्रऽसितौ । नु । अस्तु ॥ १४ ॥

---

प्र सु व इति नवर्चं [षष्ठेऽनुवाके] सप्तमं सूक्तम् । प्रियमेधपुत्रस्य सिंधुक्षित आर्षं जागतं नदीदेवताकम् । अग्निष्टोमे मरुत्वतीयशस्त्र इदं सूक्तं निविद्धानम । सौमिकचातुर्मास्येषु वैश्वदेवेऽप्येतन्मरुत्वतीयं निविद्धानम् । महाव्रतेऽपि निष्केवल्य एतत्सूक्तम् ॥

प्र सु वं आपो महिमानमुत्तमं कारुर्वोचाति सदने विवस्वतः ।
प्र सप्तसप्त त्रेधा हि चक्रमुः प्र सृत्वरीणामति सिंधुरोजसा ॥१॥

प्र । सु । वः । आपः । महिमानं । उत्ऽतमं । कारुः । वोचाति ।
सदने । विवस्वतः ।
प्र । सप्तऽसप्त । त्रेधा । हि । चक्रमुः । प्र । सृत्वरीणां । अति ।
सिंधुः । ओजसा ॥ १ ॥

प्र तेऽरदद्वरुणो यातवे पथः सिंधो यद्वाजाँ अभ्यद्रवस्त्वं ।
भूम्या अधि प्रवता यासि सानुना यदेषामग्रं जगतामिरज्यसि
॥ २ ॥

प्र । ते । अरदत् । वरुणः । यातवे । पथः । सिंधो इति । यत् ।
वाजान् । अभि । अद्रवः । त्वं ।

भूम्याः । अधि । प्रऽवता । यासि । सानुना । यत् । एषां । अग्रं ।
जगतां । इरज्यसि ॥ २ ॥

**दिवि स्वनो यतते भूम्योपर्यनंतं शुष्ममुदियर्ति भानुना ।**
**अभ्रादिव प्र स्तनयंति वृष्टयः सिंधुर्यदेति वृषभो न रोरुवत् ॥ ३ ॥**

दिवि । स्वनः । यतते । भूम्यां । उपरि । अनंतं । शुष्मं । उत् ।
इयर्ति । भानुना ।

अभ्रात्ऽइव । प्र । स्तनयंति । वृष्टयः । सिंधुः । यत् । एति ।
वृषभः । न । रोरुवत् ॥ ३ ॥

**अभि त्वा सिंधो शिशुमिन्न मातरो वाश्रा अर्षंति पयसेव धेनवः ।**
**राजेव युध्वा नयसि त्वमित्सिचौ यदासामग्रं प्रवतामिनक्षसि ॥ ४ ॥**

अभि । त्वा । सिंधो इति । शिशुं । इत् । न । मातरः । वाश्राः ।
अर्षंति । पयसाऽइव । धेनवः ।

राजाऽइव । युध्वा । नयसि । त्वं । इत् । सिचौ । यत् । आसां ।
अग्रं । प्रऽवतां । इनक्षसि ॥ ४ ॥

इमं मे गंगे यमुने सरस्वति शुतुंद्रि स्तोमं सचता परुष्ण्या ।
असिक्न्या मंरुद्वृधे वितस्तयार्जीकीये शृणुह्या सुषोमंया॥५॥

इमं । मे । गंगे । यमुने । सरस्वति । शुतुंद्रि । स्तोमं । सचत । परुष्णि । आ ।
असिक्न्या । मरुत्ऽवृधे । वितस्तंया । आर्जीकीये । शृणुहि । आ । सुऽसोमंया ॥५॥

तृष्टामंया प्रथमं यातंवे सजूः सुसर्त्वा रसयां श्वेत्या त्या ।
त्वं सिंधो कुभंया गोमतीं क्रुमुं मेहत्न्वा सरथं याभिरीयसे ॥६॥

तृष्टऽअंमया । प्रथमं । यातंवे । सऽजूः । सुऽसर्त्वा । रसयां । श्वेत्यां । त्या ।
त्वं । सिंधो इति । कुभंया । गोऽमतीं । क्रुमुं । मेहत्न्वा । सऽरथं । याभिः । ईयसे ॥ ६ ॥

ऋजीत्येनी रुशंती महित्वा परि ज्रयांसि भरते रजांसि ।
अदंब्धा सिंधुरपसामपस्तमाश्वा न चित्रा वपुंषीव दर्शता॥७॥

ऋजीती । एनी । रुशंती । महीऽत्वा । परि । ज्रयांसि । भरते । रजांसि ।
अदंब्धा । सिंधुः । अपसां । अपःऽतंमा । अश्वा । न । चित्रा । वपुंषीऽइव । दर्शता ॥ ७ ॥

स्वश्वा सिंधुः सुरथा सुवासा हिरण्ययी सुकृता वाजिनीवती ।
ऊर्णावती युवतिः सीलमावत्युताधि वस्ते सुभगा मधुवृधं ॥८॥

सुऽअश्वा । सिंधुः । सुऽरथा । सुऽवासाः । हिरण्ययी । सुऽकृता ।
वाजिनीऽवती ।
ऊर्णाऽवती । युवतिः । सीलमाऽवती । उत । अधि । वस्ते ।
सुऽभगा । मधुऽवृधं ॥ ८ ॥

सुखं रथं युयुजे सिंधुरश्विनं तेन वाजं सनिषदस्मिन्नाजौ ।
महान्ह्यस्य महिमा पनस्यतेऽदब्धस्य स्वयशसो विरप्शिनः ॥९॥

सुऽखं । रथं । युयुजे । सिंधुः । अश्विनं । तेन । वाजं । सनिषत् ।
अस्मिन् । आजौ ।
महान् । हि । अस्य । महिमा । पनस्यते । अदब्धस्य । स्वऽयशसः ।
विऽरप्शिनः ॥ ९ ॥

---

चक्षुष इति सप्तर्चं [ षष्ठेऽनुवाके ] चतुर्दशं सूक्तं भुवनपुत्रस्य विश्वकर्मण आर्षं त्रैष्टुभं विश्वकर्मदैवत्यम् ।

चक्षुषः पिता मनसा हि धीरो घृतमेने अजनन्नम्नमाने ।
यदेदंता अददृहंत पूर्व आदिद्द्यावापृथिवी अप्रथेतां ॥ १ ॥

चक्षुषः। पिता। मनसा। हि। धीरः। घृतं। एने इति। अजनत्। नम्नमाने इति।

यदा। इत्। अंताः। अदृहंत। पूर्वे। आत्। इत्। द्यावापृथिवी इति। अप्रथेतां॥ १॥

वैश्वकर्मणस्य पशो हविषः एषानुवाक्या।

विश्वकर्मा विमना आद्विहाया धाता विधाता परमोत संदृक्।
तेषामिष्टानि समिषा मदंति यत्रा सप्तऋषीन्पर एकमाहुः॥ २॥

विश्वऽकर्मा। विऽमनाः। आत्। विऽहायाः। धाता। विऽधाता। परमा। उत। संऽदृक्।

तेषां। इष्टानि। सं। इषा। मदंति। यत्र। सप्तऽऋषीन्। परः। एकं। आहुः॥ २॥

पूर्वोक्त एव पशौ पुरोडाशस्य यो नः पितेत्येषा याज्या।

यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा।
यो देवानां नामधा एक एव तं संप्रश्नं भुवना यंत्यन्या॥ ३॥

यः। नः। पिता। जनिता। यः। विऽधाता। धामानि। वेद। भुवनानि। विश्वा।

यः। देवानां। नामऽधाः। एकः। एव। तं। संऽप्रश्नं। भुवना। यंति। अन्या॥ ३॥

त आयंजंत द्रविणं सम॑स्मा ऋषंयः पूर्वे जरितारो न भूना ।
असूर्ते सूर्ते रजांसि निषत्ते ये भूतानि समकृण्वन्निमानि ॥ ४ ॥

ते । आ । अयजंत । द्रविणं । सं । अस्मै । ऋषंयः । पूर्वे । जरितारः ।
न । भूना ।
असूर्ते । सूर्ते । रजांसि । निऽसत्ते । ये । भूतानि । संऽअकृण्वन् ।
इमानि ॥ ४ ॥

परो दिवा पर एना पृथिव्या परो देवेभिरसुरैर्यदस्ति ।
कं स्विद्गर्भं प्रथमं दंध्र आपो यत्र देवाः समपश्यंत विश्वे ॥५॥

परः । दिवा । परः । एना । पृथिव्या । परः । देवेभिः । असुरैः ।
यत् । अस्ति ।
कं । स्वित् । गर्भं । प्रथमं । दध्रे । आपः । यत्र । देवाः । संऽअपश्यंत ।
विश्वे ॥ ५ ॥

तमिद्गर्भं प्रथमं दंध्र आपो यत्र देवाः समगच्छंत विश्वे ।
अजस्य नाभावध्येकमर्पितं यस्मिन्विश्वानि भुवनानि तस्थुः ॥६

तं । इत् । गर्भं । प्रथमं । दध्रे । आपः । यत्र । देवाः । संऽअगच्छंत । विश्वे ।
अजस्य । नाभौ । अधि । एकं । अर्पितं । यस्मिन् । विश्वानि ।
भुवनानि । तस्थुः ॥ ६ ॥

न तं विदाथ य इमा जजानान्यद्युष्माकमंतरं बभूव ।
नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरंति ॥ ७ ॥

न । तं । विदाथ । यः । इमा । जजान । अन्यत् । युष्माकं ।
अंतरं । बभूव ।
नीहारेण । प्रावृताः । जल्प्याः । च । असुऽतृपः । उक्थऽशासः ।
चरंति ॥ ७ ॥



हये जाय इत्यष्टादशर्चं [ अष्टमेऽनुवाके ] पंचमं सूक्तं त्रैष्टुभम् । हये जाय, इषुर्न श्रिये, या सुजूर्णिः, कदा सूनुः, सुदेवो अद्य, अंतरिक्षप्रां, सचा यदासु जहतीष्वित्याद्यास्तिस्रश्चेति नवर्चं ( १, ३, ६, १२, १४, १७, ८–१० ) ऐळस्य पुरूरवसो वाकयानि । अतस्तासां स ऋषिः । शिष्टा नवोर्वश्या वाकयानि । अतस्तासु सार्षिका । उभयोर्वाक्येषु योऽर्थः प्रतिपाद्यते सा देवता ॥

पुरूरवाः—

हये जाये मनसा तिष्ठ घोरे वचांसि मिश्रा कृणवावहै नु ।
न नौ मंत्रा अनुदितास एते मयस्करन्परतरे चनाहन् ॥१॥

हये । जाये । मनसा । तिष्ठ । घोरे । वचांसि । मिश्रा । कृणवावहै । नु ।
न । नौ । मंत्राः । अनुदितासः । एते । मयः । करन् । परऽतरे ।
चन । अहन् ॥ १ ॥

उर्वशी—

किमेता वाचा कृणवा तवाहं प्राक्रमिषमुषसामग्रियेव ।
पुरूरवः पुनरस्तं परेहि दुरापना वात इवाहमस्मि ॥ २ ॥

किं । एता । वाचा । कृणव । तवं । अहं । प्र । अक्रमिषं । उषसां । अग्रियाऽइव ।
पुरूरवः । पुनः । अस्तं । परा । इहि । दुःऽआपना । वातःऽइव । अहं । अस्मि ॥ २ ॥

पुरूरवाः—

इषुर्न श्रिय इषुधेरसना गोषाः शतसा न रंहिः ।
अवीरे क्रतौ वि दविद्युतन्नोरा न मायुं चितयंत धुनयः ॥३॥

इषुः । न । श्रिये । इषुऽधेः । असना । गोऽसाः । शतऽसाः । न । रंहिः ।
अवीरे । क्रतौ । वि । दविद्युतत् । न । उरा । न । मायुं । चितयंत । धुनयः ॥ ३ ॥

उर्वशी—

सा वसु दधती श्वशुराय वय उषो यदि वष्टयंतिगृहात् ।
अस्तं ननक्षे यस्मिञ्चाक × × × × ॥४॥

सा । वसु । दधती । श्वशुराय । वयः । उषः । यदि । वष्टि । अंतिऽगृहात् ।
अस्तं । ननक्षे । यस्मिन् । चाकन् । × × × × ॥ ४ ॥

× × × × × × × ×

पुरूरवोऽनु ते केतमायं राजा मे वीर तन्वं१स्तदासीः ॥५॥

× × × × × × × ×

पुरूरवः । अनु । ते । केतं । आयं । राजा । मे । वीर । तन्वः ।
तत् । आसी ॥ ५ ॥

पुरूरवाः—

या सुजूर्णिः श्रेणिः सुम्नआपिर्हृदेचक्षुर्न ग्रंथिनी चरण्युः ।
ता अंजयोऽरुणयो न सस्रुः श्रिये गावो न धेनवोऽनवंत ॥६॥

या । सुऽजूर्णिः । श्रेणिः । सुम्नेऽआपिः । हृदेऽचक्षुः । न । ग्रंथिनी ।
चरण्युः ।

ताः । अंजयः । अरुणयः । न । सस्रुः । श्रिये । गावः । न ।
धेनवः । अनवंत ॥ ६ ॥

उर्वशी—

समस्मिञ्जायमान आसत ग्ना उतेमवर्धन्नद्यः१ स्वगूर्ताः ।
महे यत्त्वा पुरूरवो रणायावर्धयन्दस्युहत्याय देवाः ॥ ७ ॥

सं । अस्मिन् । जायमाने । आसत । ग्नाः । उत । ईं । अवर्धन् ।
नद्यः । स्वऽगूर्ताः ।

महे । यत् । त्वा । पुरूरवः । रणाय । अवर्धयन् । दस्युऽहत्याय ।
देवाः ॥ ७ ॥

पुरूरवाः—

सचा यदासु जहतीष्वत्कममानुषीषु मानुषो निषेवे ।
अप स्म मत्तरसंती न भुज्युस्ता अत्रसन्रथस्पृशो नाश्वाः ॥८॥

सचा । यत् । आसु । जहतीषु । अत्कं । अमानुषीषु । मानुषः ।
निऽसेवे ।

अप । स्म । मत् । तरसंती । न । भुज्युः । ताः । अत्रसन् ।
रथऽस्पृशः । न । अश्वाः ॥ ८ ॥

यदासु मर्तो अमृतासु निस्पृक्सं क्षोणीभिः क्रतुभिर्न पृंक्ते ।
ता आतयो न तन्वः शुंभत स्वा अश्वासो न क्रीळयो
दंदशानाः ॥ ९ ॥

यत् । आसु । मर्तः । अमृतासु । निऽस्पृक् । सं । क्षोणीभिः ।
क्रतुऽभिः । न । पृंक्ते ।

ताः । आतयः । न । तन्वः । शुंभत । स्वाः । अश्वासः । न ।
क्रीळयः । दंदशानाः ॥ ९ ॥

विद्युन्न या पतन्ती दविद्योद्भरन्ती मे अप्या काम्यानि ।
जनिष्टो अपो नर्यः सुजातः प्रोर्वशी तिरत दीर्घमायुः ॥१०॥

विऽद्युत् । न । या । पतन्ती । दविद्योत् । भरन्ती । मे । अप्या ।
काम्यानि ।

जनिष्टो इति । अपः । नर्यः । सुऽजातः । प्र । उर्वशी । तिरत ।
दीर्घं । आयुः ॥ १० ॥

उर्वशी—

जज्ञिष इत्था गोपीथ्याय हि दधाथ तत्पुरूरवो म ओजः ।
अशासं त्वा विदुषी सस्मिन्नहन्न म आशृणोः किमभुग्वदासि
॥ ११ ॥

जज्ञिषे । इत्था । गोऽपीथ्याय । हि । दधार्थ । तत् । पुरूरवः ।
मे । ओजः ।

अशासं । त्वा । विदुषी । सस्मिन् । अहन् । न । मे । आ ।
अशृणोः । किं । अभुक् । वदासि ॥ ११ ॥

पुरूरवाः—

कदा सूनुः पितरं जात इच्छाच्चक्रन्नाश्रु वर्तयद्विजानन् ।
को दंपती समनसा वि यूयोदध यदग्निः श्वशुरेषु दीदयत् ॥१२॥

कदा । सूनुः । पितरं । जातः । इच्छात् । चक्रन् । न । अश्रु ।
वर्तयत् । विऽजानन् ।
कः । दंपती इति दंऽपती । सऽमनसा । वि । यूयोत् । अध ।
यत् । अग्निः । श्वशुरेषु । दीदयत् ॥ १२ ॥

उर्वशी—

प्रति ब्रवाणि वर्तयते अश्रु चक्रन्न क्रंददाध्ये शिवायै ।
प्र तत्ते हिनवा यत्ते अस्मे परेह्यस्तं नहि मूर मापः ॥ १३॥

प्रति । ब्रवाणि । वर्तयते । अश्रु । चक्रन् । न । क्रंदत् । आऽध्ये ।
शिवायै ।
प्र । तत् । ते । हिनव । यत् । ते । अस्मे इति । परा । इहि । अस्तं ।
नहि । मूर । मा । आपः ॥ १३॥

पुरूरवाः—

सुदेवो अद्य प्रपतेदनावृत्परावतं परमां गंतवा उ ।
अधा शयीत निर्ऋतेरुपस्थेऽधैनं वृका रभसासो अद्युः ॥ १४॥

सुऽदेवः । अद्य । प्रऽपतेत् । अनावृत् । पराऽवतं । परमां ।
गंतवै । ऊं इति ।
अध । शयीत । निःऽऋतेः । उपऽस्थे । अध । एनं । वृकाः ।
रभसासः । अद्युः ॥ १४ ॥

उर्वशी—

पुरूरवो मा मृथा मा प्र पप्तो मा त्वा वृकासो अशिवास उ क्षन् ।
न वै स्त्रैणानि सख्यानि संति सालावृकाणां हृदयान्येता ॥१५॥

पुरूरवः । मा । मृथाः । मा । प्र । पप्तः । मा । त्वा । वृकासः । अशिवासः । ऊं इति । क्षन् ।
न । वै । स्त्रैणानि । सख्यानि । संति । सालावृकाणां । हृदयानि । एता ॥ १५ ॥

यद्विरूपाचरं मर्त्येष्ववसं रात्रीः शरदश्चतस्रः ।
घृतस्य स्तोकं सकृदन्ह आश्नां तादेवेदं तातृपाणा चरामि ॥ १६ ॥

यत् । विऽरूपा । अचरं । मर्त्येषु । अवसं । रात्रीः । शरदः । चतस्रः ।
घृतस्य । स्तोकं । सकृत् । अन्हः । आश्नां । तात् । एव । इदं । ततृपाणा । चरामि ॥ १६ ॥

पुरूरवाः—

अंतरिक्षप्रां रजसो विमानीमुप शिक्षाम्युर्वशीं वसिष्ठः ।
उप त्वा रातिः सुकृतस्य तिष्ठान्नि वर्तस्व हृदयं तप्यते मे ॥१७॥

अंतरिक्षऽप्रां । रजसः । विऽमानीं । उप । शिक्षामि । उर्वशीं । वसिष्ठः ।
उप । त्वा । रातिः । सुऽकृतस्य । तिष्ठात् । नि । वर्तस्व ।
हृदयं । तप्यते । मे ॥ १७ ॥

उर्वशी—

इति त्वा देवा इम आहुरैळ यथेमेतद्भवसि मृत्युबंधुः ।
प्रजा ते देवान्हविषा यजाति स्वर्ग उ त्वमपि मादयासे ॥१८॥

इति । त्वा । देवाः । इमे । आहुः । ऐळ । यथा । ईं । एतत् ।
भवसि । मृत्युऽबंधुः ।
प्रऽजा । ते । देवान् । हविषा । यजाति । स्वःऽगे । ऊं इति । त्वं ।
अपि । मादयासे ॥ १८ ॥



किमिच्छंतीत्येकादशर्चं [ नवमेऽनुवाके ] नवमं सूक्तं त्रैष्टुभम् । ऐन्द्रपुरोहितस्य बृहस्पतेर्गोषु वलनाम्नोऽसुरस्य भटैः पणिनामकैरसुरैरपहृत्य गुहायां निहितासु सतीषु बृहस्पतिप्रेरितेनेंद्रेण गवामन्वेषणाय सरमा नाम देवशुनी प्रेषिता । सा च महतीं नदीमुत्तीर्य वलपुरं प्राप्य गुप्तस्थाने नीतास्ता गा ददर्श । अथ तस्मिन्नंतरे पणय इदं वृत्तान्तमवगच्छंत एनां मित्रीकर्तुं संवादमकुर्वन् । तत्र प्रथमातृतीयाद्या अयुजोऽंत्यावर्जिताः पणीनां वचनानि । अत्र स ऋषयः सरमा देवता । द्वितीयाचतुर्थ्याद्या युज एकादशी च षट् सरमाया वाक्यानि । अतस्तासु सर्वासु पणयो देवता।

पणयः—

किमिच्छंती सरमा प्रेदमांनड् दूरे ह्यध्वा जगुंरिः पराचैः ।
कास्मेहितिः का परितक्म्यासीत्कथं रसायां अतरः पयांसि ॥१॥

किं इच्छंती । सरमा । प्र । इदं । आनट् । दूरे । हि । अध्वा ।
जगुंरिः । पराचैः ।
का । अस्मेऽहितिः । का । परिऽतक्म्या । आसीत् । कथं ।
रसायाः । अतरः । पयांसि ॥ १ ॥

सरमा—

इंद्रस्य दूतीरिषिता चंरामि मह इच्छंती पणयो निधीन्वः ।
अतिष्कदो भियसा तन्न आवत्तथा रसायाः अतरं पयांसि ॥२॥

इंद्रस्य । दूतीः । इषिता । चरामि । महः । इच्छंती । पणयः ।
निऽधीन् । वः
अतिऽस्कदः । भियसा । तत् । नः । आवत् । तथा । रसायाः ।
अतरं । पयांसि ॥ २ ॥

पणयः—

कीदृङ्ङिन्द्रः सरमे का दृशीका यस्येदं दूतीरसरः पराकात् ।
आ च गच्छान्मित्रमेना दधामाथा गवां गोपतिर्नो भवाति ॥३॥

कीदृङ् । इंद्रः । सरमे । का । दृशीका । यस्यं । इदं । दूतीः ।
अस॑रः । परा॒कात् ।
आ । च । गच्छा॑त् । मित्रं । एन । दधाम । अर्थ । गवा॑ ।
गोऽप॑तिः । नः । भवाति ॥ ३ ॥

सरमा—

नाहं तं वेद॒ दभ्यं॒ दभत्स यस्येदं दूतीरस॑रं परा॒कात् ।
न तं गूहंति स्रवतो गभीरा हता इंद्रेण पणयः शयध्वे ॥ ४ ॥

न । अहं । तं । वेद । दभ्यं । दभ॑त् । सः । यस्यं । इदं । दूतीः ।
अस॑रं । परा॒कात् ।
न । तं । गूहंति । स्रवतः । गभीराः । हताः । इंद्रेण । पणयः ।
शयध्वे ॥ ४ ॥

पणयः—

इमा गावः सरमे या ऐच्छः परि दिवो अंतान्त्सुभगे पतंती ।
कस्त एना अव सृजादयुध्व्युतास्माकमायुधा संति तिग्मा॥ ५॥

इमाः । गावः । सरमे । याः । ऐच्छः । परि । दिवः । अंतान् ।
सुऽभगे । पतंती ।
कः । ते । एनाः । अव । सृजात् । अयुध्वी । उत । अस्माकं ।
आयुधा । संति । तिग्मा ॥ ५ ॥

सरमा—

असेन्या वः पणयो वचांस्यनिषव्यास्तन्वः संतु पापीः ।
अधृष्टो व एतवा अस्तु पंथा बृहस्पतिर्व उभया न मृळात् ॥६॥

असेन्या । वः । पणयः । वचांसि । अनिषव्याः । तन्वः । संतु । पापीः ।
अधृष्टः । वः । एतवै । अस्तु । पंथाः । बृहस्पतिः । वः । उभया ।
न । मृळात् ॥ ६ ॥

पणयः—

अयं निधिः सरमे अद्रिबुध्नो गोभिरश्वेभिर्वसुभिर्न्यृष्टः ।
रक्षंति तं पणयो ये सुगोपा रेकु पदमलकमा जगंथ ॥ ७ ॥

अयं । निऽधिः । सरमे । अद्रिऽबुध्नः । गोभिः । अश्वेभिः ।
वसुऽभिः । निऽऋष्टः ।
रक्षंति । तं । पणयः । ये । सुऽगोपाः । रेकु । पदं । अलकं ।
आ । जगंथ ॥ ७ ॥

सरमा—

एह गमन्नृषयः सोमशिता अयास्यो अंगिरसो नवग्वाः ।
त एतमूर्वं वि भजंत गोनामथैतद्वचः पणयो वमन्नित् ॥ ८ ॥

आ । इह । गमन् । ऋषयः । सोमऽशिताः । अयास्यः । अंगिरसः ।
नवऽग्वाः ।
ते । एतं । ऊर्वं । वि । भजंत । गोनां । अथ । एतत् । वचः ।
पणयः । वमन् । इत् ॥८॥

पणयः—

एवा च त्वं सरम आजगंथ प्रबाधिता सहसा दैव्येन ।
स्वसारं त्वा कृणवै मा पुनर्गा अप ते गवां सुभगे भजाम ॥९॥

एव । च । त्वं । सरमे । आऽजगंथ । प्रऽबाधिता । सहसा । दैव्येन ।
स्वसारं । त्वा । कृणवै । मा । पुनः । गाः । अप । ते । गवां ।
सुऽभगे । भजाम ॥ ९ ॥

सरमा—

नाहं वेद भ्रातृत्वं नो स्वसृत्वमिंद्रो विदुरंगिरसश्च घोराः ।
गोकामा मे अच्छदयन्यदायमपात इत पणयो वरीयः ॥१०॥

न । अहं । वेद । भ्रातृऽत्वं । नो इति । स्वसृऽत्वं । इंद्रः । विदुः ।
अंगिरसः । च । घोराः ।
गोऽकामाः । मे । अच्छदयन् । यत् । आयं । अप । अतः ।
इत । पणयः । वरीयः ॥१०॥

दूरमित पणयो वरीय उद्गावो यंतु मिनतीर्ऋतेन ।
बृहस्पतिर्या अविंदन्निगूळ्हाः सोमो ग्रावाण ऋषयश्च विप्राः॥११

दूरं । इत । पणयः । वरीयः । उत् । गावः । यंतु । मिनतीः । ऋतेन ।
बृहस्पतिः । याः । अविंदत् । निऽगूळ्हाः । सोमः । ग्रावाणः ।
ऋषयः । च । विप्राः ॥ ११ ॥

'नवा' इति नवर्चं [दशमेऽनुवाके] पंचमं सूक्तम्। भिक्षुर्नामांगिरस ऋषिः। प्रथमाद्वितीये जगत्यौ शिष्टाः सप्त त्रिष्टुभः। अत्र धनस्यान्नस्य च दानं स्तूयते। अतस्तद्देवत्यमिदम्। प्रातरनुवाकाश्विनशस्त्रयोजार्गते छंदसीदं सूक्तम्।

न वा उं देवाः क्षुधमिद्वधं ददुरुताशितमुप गच्छंति मृत्यवः।
उतो रयिः पृणतो नोप दस्यत्युतापृणन्मर्डितारं न विंदते ॥१॥

न। वै। ऊं इति। देवाः। क्षुधं। इत्। वधं। ददुः। उत। आशितं। उप। गच्छंति। मृत्यवः।
उतो इति। रयिः। पृणतः। न। उप। दस्यति। उत। अपृणन्। मर्डितारं। न। विंदते॥ १ ॥

य आध्राय चकमानाय पित्वोऽन्नवान्त्सन्रफितायोपजग्मुषे।
स्थिरं मनः कृणुते सेवते पुरोतो चित्स मर्डितारं न विंदते॥२॥

यः। आध्राय। चकमानाय। पित्वः। अन्नऽवान्। सन्। रफिताय। उपऽजग्मुषे।
स्थिरं। मनः। कृणुते। सेवते। पुरा। उतो इति। चित्। सः। मर्डितारं। न। विंदते॥ २ ॥

स इद्भोजो यो गृहवे ददात्यन्नकामाय चरते कृशाय।
अरमस्मै भवति यामहूता उतापरीषु कृणुते सखायं॥ ३ ॥

सः । इत् । भोजः । यः । गृहवे । ददाति । अन्नऽकामाय ।
चरते । कृशाय ।
अरं । अस्मै । भवति । यामऽहुतौ । उत । अपरीषु । कृणुते ।
सखायं ॥ ३ ॥

न स सखा यो न ददाति सख्ये सचाभुवे सचमानाय पित्वः ।
अपास्मात्प्रेयान्न तदोको अस्ति पृणंतमन्यमरणं चिदिच्छेत् ॥४॥

न । सः । सखा । यः । न । ददाति । सख्ये । सचाऽभुवे ।
सचमानाय । पित्वः ।
अप । अस्मात् । प्र । इयात् । न । तत् । ओकः । अस्ति । पृणंतं ।
अन्यं । अरणं । चित् । इच्छेत् ॥ ४ ॥

पृणीयादिन्नाधमानाय तव्यान्द्राघीयांसमनु पश्येत पंथां ।
ओ हि वर्तंते रथ्येव चक्रान्यमन्यमुप तिष्ठंत रायः ॥ ५ ॥

पृणीयात् । इत् । नाधमानाय । तव्यान् । द्राघीयांसं । अनु ।
पश्येत । पंथां ।
ओ इति । हि । वर्तंते । रथ्याऽइव । चक्रा । अन्यंऽअन्यं । उप ।
तिष्ठंत । रायः ॥ ५ ॥

मोघमन्नं विंदते अप्रचेताः सत्यं ब्रवीमि वध इत्स तस्य ।
नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादी ॥६॥

मोघं । अन्नं । विंदते । अप्रंऽचेताः । सत्यं । ब्रवीमि । वधः ।
इत् । सः । तस्यं ।
न । अर्यमणं । पुष्यंति । नो इति । सखांयं । केवंलऽअघः ।
भवति । केवलऽआदी ॥ ६ ॥

कृषन्नित्फाल आशितं कृणोति यन्नध्वांनमप वृंक्ते चरित्रैः ।
वदंन्ब्रह्मावंदतो वनीयान्पृणन्नापिरपृंणंतमभि ष्यात् ॥ ७ ॥

कृषन् । इत् । फालः । आशितं । कृणोति । यन् । अध्वांनं । अपं ।
वृंक्ते । चरित्रैः ।
वदंन् । ब्रह्मा । अवंदतः । वनीयान् । पृणन् । आपिः । अपृंणंतं ।
अभि । स्यात् ॥ ७ ॥

एकंपाद्भूयो द्विपदो वि चंक्रमे द्विपात्त्रिपादमभ्येति पश्चात् ।
चतुंष्पादेति द्विपदांमभिस्वरे संपश्यंन्पंक्तीरुपतिष्ठंमानः ॥८॥

एकंऽपात् । भूयंः । द्विऽपर्दः । वि । चक्रमे । द्विऽपात् । त्रिऽपादं ।
अभि । एति । पश्चात् ।
चतुंःऽपात् । एति । द्विऽपदां । अभिऽस्वरे । संऽपश्यंन् । पंक्तीः ।
उपऽतिष्ठंमानः ॥ ८ ॥

समौ चिद्धस्तौ न समं विविष्टः संमातरां चिन्न समं दुंहाते ।
यमयोश्चिन्न समा वीर्याणि ज्ञाती चित्संतौ न समं पृंणीतः॥९॥

